University of Mysore

Oriental Research Institute Publications
SANSKRIT SERIES No. 93

GENERAL EDITOR
SRI H. R. RANGASWAMY IYENGAR, M.A.,
*Superintendent, Oriental Research Institute, Mysore*

श्रीरामाग्निचिद्वृत्तिसहितधूर्तस्वामिभाष्यभूषितम्

# आपस्तम्बीयं श्रौतसूत्रम्

(द्वितीयसंपुटम् ६–८ प्रश्नाः)

# THE ŚRAUTA SŪTRA OF ĀPASTAMBA

WITH

## THE BHASYA OF DHŪRTASWĀMI

AND

## THE VṚTTI OF RĀMĀGNICIT

**Vol. II (Praśnas 6–8)**

EDITED BY
VIDWAN T. T. SRINIVASAGOPALACHARYA,
*First Resident Pandit, Oriental Research Institute, Mysore*

MYSORE:
PRINTED BY THE SENIOR ASST. DIRECTOR, GOVT. BRANCH PRESS
1953

॥ श्रीः ॥

नमः परब्रह्मणे सर्वयज्ञसमाराध्याय.

# आपस्तम्बश्रौतसूत्रद्वितीयसंपुटप्रस्तावना

श्रीमान् यो मधुकैटभाख्यदितिजावाम्नायपाटच्चरौ
हत्वाऽऽहृत्य च तान् समस्तनिगमान् स्रष्ट्रे समन्वग्रहीत् ।
व्याख्याचिह्नवराब्जचक्रविलसत्कोशोल्लसत्पाणिकं
पद्मस्थं हयकन्धरं कमलयाऽऽश्लिष्टं तमीडीमहि ॥

ऋग्यजुस्सामरूपाय ब्रह्मनिःश्वसितात्मने ।
अनाद्यन्ताय निगमपुरुषाय नमोनमः ॥

यज्ञदेहयजुश्शाखाकल्पसूत्रप्रवर्तकः ।
सकलाम्नायविज्जीयादापस्तम्बो महामुनिः ॥

कल्पसूत्रनिगूढार्थप्रकाशनविचक्षणाः ।
भाष्यवृत्त्यादिकर्तारो जयन्तु सुधियां वराः ॥

अयि भोस्सुधीमणयः सुविदितमेवैतत्प्राच्यपरिज्ञानलालसानां विपश्चिदपश्चिमानां विश्वेषामपि तत्रभवताम्, यत्किल सकलपुरुषार्थावबोधनैदंपर्येण प्रवृत्तः ऐहिकामुष्मिकश्रेयस्साधकपरमात्मसमाराधकबहुविधयज्ञेतिकर्तव्यतापरब्रह्मस्वरूपाद्यवबोधकः पूर्वोत्तरकाण्डद्वयात्मकोऽनन्यसामान्यमहिमा गैर्वाणवाण्यश्चितश्चाकृत्रिमो वेदनामा ग्रन्थराशिर्नवनवोन्मिषद्बहुविधभाषाप्रबन्धप्रचुरेऽप्यस्मिन् काले विराजत इति ।

## वेदशब्दार्थः

सोऽयं वेदशब्दः —

"वेदेन वै देवा असुराणां वित्तं वेद्यमविन्दत, तद्वेदस्य वेदत्वम्" (तै.-सं.-१-४-२०)

'वेदेन वेदिं विविदुः पृथिवीम्' (तै. ब्रा. ३-३-९-६९).

इत्यादिभिर्निर्वचनश्रवणात्,

'विद्यते लभ्यतेऽनेनेति करणे घञ्'

इति, 'पुरुषार्थानां वेदयिता वेद उच्यते' (तै. सं. भ. भा. ३-३-४-७) इति च भट्टभास्करमिश्रभाषणात्,

'व्युत्पाद्यते च वेदशब्दो विदन्त्यनन्यप्रमाणवेद्यं धर्मलक्षणमर्थं यस्मादिति वेदः' (म. स्मृ. मे. भा. २-६).
इति मनुस्मृतौ मेधातिथिभाष्यदर्शनात्,

'विदन्त्यनेन धर्मं वेदः' (अमर. टी. क्षीर. १-५-३).
इत्यमरव्याख्यातृक्षीरस्वाम्युक्तेः,

'विदन्ति धर्मादिकमनेनेति वेदः' (अमर. टी. सर्वा. १-५-३).
इत्यमरव्याख्यातृसर्वानन्दोक्तेः

'विदन्त्यनेन धर्मं वेदः'
इत्यभिधानचिन्तामणौ (अभि. चि. १०६ पु). हेमचन्द्रेणाभिधानाच्च ज्ञानार्थकाद्विदधातोः करणे घञा निष्पन्नो ज्ञानसाधनमाचष्ट इति पर्यवस्यति। तत्र च प्रत्यक्षादिज्ञानसाधनानां लोकत एव सिद्धत्वान्न तत्र वेदाख्यशब्दराश्यपेक्षाऽऽवश्यकीत्यलौकिककर्मब्रह्मज्ञानसाधनमेव वेदशब्देनाभिप्रेतमिति निर्धार्यते। अत एव ह्युक्तमभियुक्तैः—

प्रत्यक्षेणानुमित्या वा यस्तूपायो न बुध्यते।
एनं विदन्ति वेदेन तस्माद्वेदस्य वेदता॥

इति। एतदभिप्रायेणैव विष्णुतत्त्वनिर्णये प्रथमपरिच्छेदे श्रीमदानन्दतीर्थमुनिभिरप्युक्तम् "नेन्द्रियाणि नानुमानं वेदा ह्येवैनं वेदयन्ति तस्मादाहुर्वेदा इति पिप्पलादश्रुतिः" इति।

अत एव च पूर्वमीमांसासूत्रकृता जैमिनिमहर्षिणा प्राधान्यतोऽलौकिकश्रेयस्साधककर्मप्रतिपादकपूर्वकाण्डव्याख्यानार्थं प्रवृत्तेन 'अथातो धर्मजिज्ञासा' (पू. मी. सू. १-१-१) 'चोदनालक्षणोऽर्थो धर्मः' (पू. मी. सू. १-१-२) इत्यादि सूत्रितम्। तथैवोत्तरमीमांसासूत्रप्रणेत्रा भगवद्बादरायणमहर्षिणाऽप्युत्तरकाण्डरूपोपनिषत्प्रतिपाद्यब्रह्मस्वरूपादिप्रकाशनाय 'अथातो ब्रह्मजिज्ञासा' (उ. मी. सू. १-१-१) 'शास्त्रयोनित्वात्' (उ. मी. सू. १-१-३) इत्यादि सूत्रितम्।

## वेदस्य सामानान्यतो विभागः

सोऽयं वेदः—'पूर्वं भगवता व्यासेन जगदुपकारार्थमेकीभूय

स्थिता वेदा व्यस्ताः शाखाश्च परिच्छिन्नाः' इति तैत्तिरीयसंहितायां भट्टभास्करमिश्रभाषणात्,

'वेदं तावदेकं सन्तमतिमहत्त्वाद्दुरध्येयमनेकशाखाभेदेन समाम्नासिषुः–सुखग्रहणाय व्यासेन समाम्नातवन्तः' (दु-नि १-२०) इति निरुक्तौ दुर्गसिंहोक्तेः,

एको वेदश्चतुर्धा तु तैः कृतो द्वापरादिषु।
(वि. पु. ३-३-२०)

इति विष्णुपुराणे स्मरणाच्चाभिन्नशरीरो दुरधिगमो मन्दप्रज्ञैरिति विचिन्त्य—

त्रेतादौ सत्वसंकोचाद्रजसि प्रविजृम्भिते। (५१ श्लो)
अपान्तर[1]तमा नाम मुनिर्वाकसंभवो हरेः॥ (५३ श्लो)
उद्भूतत्र धीरूपमृग्यजुस्सामसंकुलम्। (५८-श्लो)
विष्णुसंकल्पसंभूतमेतद्वाच्यायनेरितम्॥ (५९ श्लो)
(अहिर्बुध्न्यसंहिता ११ अध्या)

अपान्तरतमा नाम सुतो वाकसंभवः प्रभोः। (३९ श्लो)
तेन भिन्नास्तदा वेदा मनोः स्वायंभुवेऽन्तरे॥ (४१ श्लो)
अपान्तरतमाश्चैव वेदाचार्यस्स उच्यते।
प्राचीनगर्भं तमृषिं प्रवदन्तीह केचन॥ (६६ श्लो)
(म. भा. शा. ३५९ अध्या)

इत्यादिप्रमाणानुरोधेन त्रेतादौ प्राचीनगर्भापरनामधेयेन अपान्तरतमोनाम्ना ततः कलिद्वापरसंधौ च—

[2]प्रायेण मुनयस्सर्वे स्वार्थसाधनतत्पराः।
द्वैपायनस्तु [3]भगवानेको भूतहिते रतः।
(इतिहाससमुच्चये ७ श्लो)

इति प्रशंसितमाहात्म्येन द्वैपायनापराह्वयेन भगवद्बादरायणमहर्षिणा च संघातात्मना स्थितस्यास्य वेदस्य ऋग्यजुस्सामाथर्वभेदेन चतुर्धा विभाग आकलितः। एवं विभजनादेव हि व्यस्यतीति व्यास इति व्युत्पत्त्या वेदविभागकर्तुर्व्यास इत्यन्वर्थं नामधेयमिति सुप्रतीतम्॥

---

[1] तपा–पा. [2] प्रायशो मुनयस्सर्वे केवलात्महिते रताः।–पा.
[3] भगवान् सर्वभूतहिते रतः–पा.

इति, 'पुरुषार्थानां वेदयिता वेद उच्यते' (तै. सं. भ. भा. ३-३-४-७) इति च भट्टभास्करमिश्रभाषणात्,

'व्युत्पाद्यते च वेदशब्दो विदन्त्यनन्यप्रमाणवेद्यं धर्मलक्षणमर्थं यस्मादिति वेदः' (म. स्मृ. मे. भा. २-६).

इति मनुस्मृतौ मेधातिथिभाष्यदर्शनात्,

'विदन्त्यनेन धर्मं वेदः' (अमर. टी. क्षीर. १-५-३).

इत्यमरव्याख्यातृक्षीरस्वाम्युक्तेः,

'विदन्ति धर्मादिकमनेनेति वेदः' (अमर.टी. सर्वा. १-५-३).

इत्यमरव्याख्यातृसर्वानन्दोक्तेः

'विदन्त्यनेन धर्मं वेदः'

इत्यभिधानचिन्तामणौ (अभि. चि. १०६ पु). हेमचन्द्रेणाभिधानाच्च ज्ञानार्थकाद्विदधातोः करणे घञा निष्पन्नो ज्ञानसाधनमाचष्ट इति पर्यवस्यति। तत्र च प्रत्यक्षादिज्ञानसाधनानां लोकत एव सिद्धत्वान्न तत्र वेदाख्यशब्दराश्यपेक्षाऽऽवश्यकीत्यलौकिककर्मब्रह्मज्ञानसाधनमेव वेदशब्देनाभिप्रेतमिति निर्धार्यते। अत एव ह्युक्तमभियुक्तैः—

प्रत्यक्षेणानुमित्या वा यस्तूपायो न बुध्यते ।
एनं विदन्ति वेदेन तस्माद्वेदस्य वेदता ॥

इति। एतदभिप्रायेणैव विष्णुतत्त्वनिर्णये प्रथमपरिच्छेदे श्रीमदानन्दतीर्थमुनिभिरप्युक्तम् "नेन्द्रियाणि नानुमानं वेदा ह्येवैनं वेदयन्ति तस्मादाहुर्वेदा इति पिप्पलादश्रुतिः" इति।

अत एव च पूर्वमीमांसासूत्रकृता जैमिनिमहर्षिणा प्राधान्यतोऽलौकिकश्रेयस्साधककर्मप्रतिपादकपूर्वकाण्डव्याख्यानार्थं प्रवृत्तेन 'अथातो धर्मजिज्ञासा' (पू. मी. सू. १-१-१) 'चोदनालक्षणोऽर्थो धर्मः' (पू. मी. सू. १-१-२) इत्यादि सूत्रितम्। तथैवोत्तरमीमांसासूत्रप्रणेत्रा भगवद्बादरायणमहर्षिणाऽप्युत्तरकाण्डरूपोपनिषत्प्रतिपाद्यब्रह्मस्वरूपादिप्रकाशनाय 'अथातो ब्रह्मजिज्ञासा' (उ. मी. सू. १-१-१) 'शास्त्रयोनित्वात्' (उ. मी. सू. १-१-३) इत्यादि सूत्रितम्।

## वेदस्य सामानान्यतो विभागः

सोऽयं वेदः—'पूर्वं भगवता व्यासेन जगदुपकारार्थमेकीभूय

स्थिता वेदा व्यस्ताः शाखाश्च परिच्छिन्नाः' इति तैत्तिरीयसंहितायां भट्टभास्करमिश्रभाषणात्,

'वेदं तावदेकं सन्तमतिमहत्त्वाद्दुरध्येयमनेकशाखाभेदेन समाम्नासिषुः–सुखग्रहणाय व्यासेन समाम्नातवन्तः' (दु-नि १-२०) इति निरुक्तौ दुर्गसिंहोक्तेः,

एको वेदश्चतुर्धा तु तैः कृतो द्वापरादिषु।
(वि. पु. ३-३-२०)

इति विष्णुपुराणे स्मरणाच्चाभिन्नशरीरो दुरधिगमो मन्दप्रज्ञैरिति विचिन्त्य—

त्रेतादौ सत्वसंकोचाद्रजसि प्रविजृम्भिते। (५१ श्लो)
अपान्तर[1]तमा नाम मुनिर्वाकसंभवो हरेः॥ (५३ श्लो)
उद्भूत्तत्र धीरूपमृग्यजुस्सामसंकुलम्। (५८-श्लो)
विष्णुसंकल्पसंभूतमेतद्वाच्यायनेरितम्॥ (५९ श्लो)
(अहिर्बुध्न्यसंहिता ११ अध्या)

अपान्तरतमा नाम सुतो वाक्संभवः प्रभोः। (३९ श्लो)
तेन भिन्नास्तदा वेदा मनोः स्वायंभुवेऽन्तरे॥ (४१ श्लो)
अपान्तरतमाश्चैव वेदाचार्यस्स उच्यते।
प्राचीनगर्भं तमृषिं प्रवदन्तीह केचन॥ (६६ श्लो)
(म. भा. शा. ३५९ अध्या)

इत्यादिप्रमाणानुरोधेन त्रेतादौ प्राचीनगर्भापरनामधेयेन अपान्तरतमोनाम्ना ततः कलिद्वापरसंधौ च—

[2]प्रायेण मुनयस्सर्वे स्वार्थसाधनतत्पराः।
द्वैपायनस्तु [3]भगवानेको भूतहिते रतः।
(इतिहाससमुच्चये ७ श्लो)

इति प्रशंसितमाहात्म्येन द्वैपायनापराह्वयेन भगवद्बादरायणमहर्षिणा च संघातात्मना स्थितस्यास्य वेदस्य ऋग्यजुस्सामाथर्वभेदेन चतुर्धा विभाग आकलितः। एवं विभजनादेव हि व्यस्यतीति व्यास इति व्युत्पत्त्या वेदविभागकर्तुर्व्यास इत्यन्वर्थं नामधेयमिति सुप्रतीतम्॥

---

[1] तपा–पा.  [2] प्रायशो मुनयस्सर्वे केवलात्महिते रताः।–पा.
[3] भगवान् सर्वभूतहिते रतः–पा.

## चतुर्वेद्यां त्रयीशब्दप्रवृत्तिः

अस्मिंश्च वेदाख्यशब्दराशौ त्रिविधशब्दरीतिदर्शनात्समुदितोऽयं त्रयीशब्देनापि व्यपदिश्यते । त्रिविधा ह्यत्र शब्दरीतिः परिदृश्यते-पादबद्धऋग्रूपा गीत्यात्मकसामरूपा गद्यात्मकयजूरूपा चेति। यद्यपि यजुस्संहितायामपि तत्र तत्र ऋच उपलभ्यन्ते, तथाऽपि मल्लग्रामनीत्या यजुषां भूयस्तया तथा व्यपदेश इति ज्ञायते । ईदृशरीतित्रितयस्य प्रत्येकमृगादावसत्त्वेन ऋक्त्रयी यजुस्त्रयीत्यादिव्यवहाराभावेन क्वचिदुपलम्भेऽपि वा हस्तादौ शरीरव्यवहारवद्गौणतया वेदसंघात एवायं त्रयीशब्दो मुख्यः प्रवर्तते। अत एव (शब्दादिवर्गे ३ श्लो) नामलिङ्गानुशासने—

'स्त्रियामृक्सामयजुषी इति वेदास्त्रयस्त्रयी ।'

इत्यत्र त्रय इत्येतस्य प्रदर्शितऋगाद्याख्यशब्दरीतित्रयविशिष्टा इत्यर्थोऽभ्युपेयः । वेदशब्दो हि ऋगादिचतुष्टयसाधारण इत्यविप्रतिपन्नम्। अत एव पूर्वं 'श्रुतिः स्त्री वेद आम्नायस्त्रयी' इति वेदशब्दपर्यायान् संगृह्य 'धर्मस्तु तद्विधिः' इत्युक्तं दृश्यते ॥

एतेन ऋग्यजुस्सामाख्यवेदत्रयस्यैव त्रयीपदव्यपदेश्यत्वं नाथर्ववेदघटितस्येति वदन्तस्समाहिताः। त्रयीशब्दस्य अनुपदोक्तशब्दरीतित्रितयविशिष्टाभिधायकतया अथर्ववेदघटितवेदसमुदायेऽपि त्रयीशब्दप्रवृत्तौ बाधकाभावात्। अत एव च भगवता जैमिनिमहर्षिणाऽपि सूत्रितम् 'तेषामृग्यत्रार्थवशेन पादव्यवस्था' (पू. मी. सू. २-१-३५) 'गीतिषु सामाख्या' (पू. मी. सू. २-१-३६) 'शेषे यजुश्शब्दः' (पू. मी. सू. २-१-३७) इति।

अनेन 'आदौ त्रयाणामेव वेदानां प्रामाण्यमासीत्, ब्राह्मणादिषु त्रयी विद्येति व्यवहारात्। ततश्चतुर्थस्य प्रामाण्यं साधितम्, इति नव्यविमर्शस्य नावकाशः । ब्राह्मणादिषु श्रूयमाणस्य त्रयीशब्दस्यानुपदोक्तरीत्या शब्दरीतित्रैविध्याभिप्रायकतयाऽथर्ववेदघटितवेदसमुदायविषयकत्वस्याव्याहतत्वादित्यलं विस्तरेण ।

## वेदशब्दपर्यायाः

विना पुस्तकपाठं गुरुभ्य एव श्रोतव्यतयाऽभ्यसनयितयाऽ-

ध्येतव्यतया चायं वेदः श्रुत्याम्नायस्वाध्यायादिशब्दैरपि व्यपदिश्यते।

## वेदनित्यत्वादिकम्

अश्रूयमाणकर्तृकत्वादस्मर्यमाणकर्तृकत्वाद्ब्रह्मनिःश्वसिततया श्रूयमाणत्वात्क्वाचित्क्वचिदार्षत्वश्रवणस्य प्रवचनदर्शनादिनोपपत्तेर्जनिश्रवणस्य प्रकाशेनान्यपर्याच्च कृत्स्नस्यास्य वेदस्य नित्यत्वापौरुषेयत्वे एव मीमांसकादयस्सङ्गिरन्ते।

ननु वेदानां वर्णसङ्घातरूपत्वाद्वर्णानां चानित्यत्वस्यानेकदार्शनिकाभिमतत्वात्कथं वेदानां नित्यत्वमिति चेत्परिहृतमेतत् सर्वतन्त्रसंकटप्रशमनविशङ्कटमतिभिः श्रीमद्वेदान्ताचार्यैर्न्यायपरिशुद्धौ प्रथमाध्यायेऽक्षपाददर्शनस्य वेदान्ताविरोधसमर्थनप्रकरणे 'समाननामरूपत्वाच्च' इत्याद्याक्षपादसूत्राशयप्रकाशनपूर्वकं 'अर्थाभिप्रायेण प्रतियुगं प्रकाश्यमानसमानानुपूर्वीकत्वाभिप्रायेण च नित्यत्वोक्तेरविरोधः' इति। श्रूयते च तथैव 'धाता यथापूर्वमकल्पयत्' इत्यादि। अतस्सिद्धमेतत्प्रतिकल्पमेकरूपमेव नित्यं वेदराशिं भगवान् प्रकाशयतीति।

## संहिताब्राह्मणादिना विशेषतो वेदविभागः

इत्थमृगादिना चतुर्धा विभक्तोऽप्ययं वेदः प्रत्येकं संहिताब्राह्मणारण्यकोपनिषद्भेदैश्चतुर्धा विभक्तो दृश्यते। यद्यपि संहितायामपि ब्राह्मणभागस्तथा ब्राह्मणेऽपि मन्त्रभागश्श्रूयते, तथाऽपि संहितायां मन्त्रभागबाहुल्यात्संहितेति ब्राह्मणे ब्राह्मणभागबाहुल्याद्ब्राह्मणमिति च व्यपदेश इति ज्ञायते। आरण्यकोपनिषदां च ब्राह्मण एवान्तर्भावतात्पर्येण 'मन्त्रब्राह्मणयोर्वेदनामधेयम्' (आ-परि-सू. १-३३) इत्यापस्तम्बमहर्षिणा सूत्रितम्।

## कल्पसूत्रावतरणम्

तमेनं वेदराशिं समवलम्ब्य एतत्पूर्वभागात्मककर्मकाण्डप्रतिपाद्यानां नित्यनैमित्तिककाम्यभूतश्रौतस्मार्तयज्ञानामितिकर्तव्यताप्रपञ्चनाय बहवो मुनयः कल्पसूत्रग्रन्थानुपकल्पयांचक्रुः।

तेषु चान्यतमेन निखिलागमसर्वस्ववेदिनाऽऽपस्तम्बमहामुनिना आपस्तम्बकल्पसूत्राख्यो महान् कल्पसूत्रप्रबन्धो निरमायि।

## आपस्तम्बकल्पसूत्रभागाः, तत्प्रतिपाद्यसङ्ग्रहश्च

तदिदं कल्पसूत्रं श्रौतसूत्रं गृह्यसूत्रं पितृमेधसूत्रं धर्मसूत्रं शुल्बसूत्रमिति षड्भिर्भागैर्विभक्तं दृश्यते। अत्र केचन रुद्रदत्तादयः परिभाषासूत्रभागं श्रौतसूत्रान्तं चतुर्विंशप्रश्नरूपं मन्यन्ते। धूर्तस्वाम्यादयो बहवस्तु तस्य कल्पसूत्रादिमभागतां सङ्गिरन्ते। तथैव परिभाषाप्रश्नस्य प्राथम्यसमर्थनार्थं परिभाषाप्रश्नस्य व्याख्यारूपे कपर्दिभाष्ये वक्ष्यमाणसर्वकर्मसाधारणत्वात्परिभाषायाः प्रथममेव कथनं समीचीनमित्यभिप्रायेण 'तदिदं व्याख्यानं सर्वकर्मशेषत्वादादावेव प्राप्तं सत्' इत्युक्त्वा श्रौतसूत्रान्ते करणे तत्समनन्तराभिधीयमानाचारगृह्यकर्मस्वस्य प्राप्तिर्न स्यादित्याशयेन 'अन्ते कृतं कथं नु नामाचारगृह्यकर्मस्वपि प्राप्तं स्यात्' इति भाषितं दृश्यते।

ततश्चायमत्रापस्तम्बीयकल्पसूत्रार्थक्रमस्संगृह्यते। यथा—तत्रादौ परिभाषाप्रश्ने—सर्वयज्ञकर्मसाधारणपरिभाषा प्रवरो हौत्रं च निरूप्यते।

ततस्त्रयोविंशतिप्रश्नपरिमिते श्रौतसूत्रभागे आदितस्त्रिषु प्रश्नेषु दर्शपूर्णमासौ, चतुर्थे—याजमानं, पञ्चमे—अग्न्याधेयपुनराधेये, षष्ठे—अग्निहोत्राग्न्युपस्थाने, सप्तमे—निरूढपशुबन्धः, अष्टमे—वैश्वदेववरुणप्रघाससाकमेधशुनासीरीयाख्यानि पञ्च चातुर्मास्यपर्वाणि, नवमे—चातुर्मास्यप्रायश्चित्तानि, दशमैकादशद्वादशेषु—अग्निष्टोमप्रातस्सवने, त्रयोदशे—माध्यंदिनतृतीयसवने, चतुर्दशे—उक्थ्यषोडश्यतिरात्राप्तोर्यामैकादशिनीचातुर्होत्रपञ्चहोत्रषड्ढोत्रसप्तहोत्रादयः सोमप्रायश्चित्तं च, पञ्चदशे प्रवर्ग्यः, षोडशसप्तदशयोः—अग्निचयनम्, अष्टादशे—वाजपेयराजसूये, एकोनविंशे—सौत्रामणिकौकिल्यौ सावित्रनाचिकेतचातुर्होत्रवैश्वसृजानि काम्याः पशविष्टयश्च, विंशे—अश्वमेधपुरुषमेधसर्वमेधाः, एकविंशे—द्वादशाहो गवामयनमुत्सर्गिणामयनं च, द्वाविंशे—एकाहा अहीना-

स्सवाश्च, त्रयोविंशे—सत्राणीत्येतानि श्रौतानि यज्ञकर्माणि निरूप्यन्ते।

ततः प्रश्नद्वयपरिमिते गृह्यसूत्रे स्मार्तपाकयज्ञादिप्रदर्शनपरे गार्ह्याणि कर्माण्यभिधीयन्ते।

तदन्वेकप्रश्नात्मके पितृमेधसूत्रे—पुत्रादिभिः पितृमरणानन्तरकर्तव्याऽन्त्येष्टिरभिधीयते।

तदनन्तरं च प्रश्नद्वयात्मके धर्मसूत्रे सामयाचारिका धर्मा निरूप्यन्ते।

अन्ते चैकप्रश्नात्मके शुल्बसूत्रे—तत्तत्कर्मोपयोगिवेद्यादिनिर्माणक्रमोऽभिधीयते। अग्निचयनप्रश्नात्पूर्वोऽयं शुल्बप्रश्न इति केचिदभिप्रयन्तीति।

## एतत्कल्पसूत्रावान्तरभागानामत्र मुद्रितानां निर्देशः

एतत्कल्पसूत्रादिमप्रश्नगतो यः कर्मसामान्यपरिभाषाभागः स इत एव संस्थातो बह्वोः कालात्पुरैव आपस्तम्बश्रौतपरिभाषासूत्रनाम्ना कपर्दिहरदत्तभाष्याभ्यां सह संमुद्रय प्रकाशितः। तथा गृह्यसूत्रात्मकोऽपि भागः श्रीसुदर्शनार्यभाष्येण सह आपस्तम्बगृह्यसूत्रनाम्ना प्रकाशितः। तथैव धर्मसूत्रभागोऽपि हरदत्तप्रणीतयोज्ज्वलाख्यया वृत्त्या सह आपस्तम्बधर्मसूत्रनाम्ना प्रकाशितः।

शुल्बप्रश्नभागोऽपि कपर्दिकरविसुन्दरराजाह्वयैस्त्रिभिः प्रणीतया व्याख्यात्रय्या सार्धं आपस्तम्बशुल्बसूत्रनाम्ना प्राकाशि।

तथा श्रौतसूत्रभागोऽपि प्रथमप्रश्नप्रभृति पञ्चमप्रश्नान्तो धूर्तस्वामिभाष्येण तद्विवृतिरूपया कौशिकरामाग्निचित्प्रणीतया वृत्त्या साकमितः पूर्वमेव आपस्तम्बश्रौतसूत्रनाम्ना प्रकाशिते प्रथमे संपुटे प्राकाश्यमनायि। तदिदानीं द्वितीये संपुटे तदुपरितनं अग्निहोत्रपशुबन्धचातुर्मास्यानामितिकर्तव्यताप्रकाशनपरं षष्ठप्रश्नप्रभृत्यष्टमप्रश्नान्तं भागमपि धूर्तस्वामिभाष्यतद्विवृतिरूपरामाग्निचिद्वृत्तिभ्यां सहैव संमुद्रय प्रेक्षावद्भ्यस्समुपहरामः।

## भाष्यवृत्तिकृतोर्धूर्तस्वामिरुद्रदत्तयोर्मतिभेदसूचनम्

एतच्छ्रौतसूत्रविवरणविषये धूर्तस्वामिरुद्रदत्तयोस्तत्र तत्र मतिभेदो दृश्यते। यथा—अग्निहोत्रिणः प्रवासविधिप्रकरणे ११५ तमपुटे 'नवरात्रवास्तौ वा पुनरेत्यैकामुषित्वा प्रयास्यन् जुहुयात्' (आ. श्रौ. ६ प्र २२ खं. ६ सू) इति सूत्रे धूर्तस्वामिना नवरात्रपदस्य प्रदर्शनार्थत्वतात्पर्येण 'चतूरात्रवास्तावपि पुनरेकामुषित्वा प्रयास्यन् जुहोति' इति भाषितम्। रुद्रदत्तेन तु तदिदं धूर्तस्वामिभाष्यं 'प्रदर्शनार्थमेतत्, पञ्चावरादिकल्पेष्वपि चतूरात्रादिवास्तौ पुनरेत्येत्यादि योजयन्ति तदयुक्तम्। प्रदर्शनार्थत्वे प्रमाणाभावात्। तथा सत्यष्टरात्रवास्तौ पुनरेत्य द्वे उषित्वेत्यादिप्रदर्शनप्रसङ्गाच्च' इत्यादिना प्रतिक्षिपम्।

तथा १४८ तमे पुटे 'तस्यास्सप्तदश सामिधेन्यः' (आ. श्रौ.६ प्र. ३१ खं ४ सू) इति सूत्रे धूर्तस्वामिना 'साप्तदश्यस्य पुनर्विधानान्नाज्यानीरित्युपदेशः' इत्युपदेशपक्षः प्रदर्शितः। तत्र रुद्रदत्तेन तु अज्यान्यादेर्ग्रहणतात्पर्येण 'अज्यान्यादेस्सर्वस्यापि विशेषस्य प्रदर्शनार्थम्' इति तत्प्रतिपक्ष एव प्रदर्शितः।

तथैव १६२ तमे पुटे 'यं कामयेताप्रतिष्ठितस्स्यादित्युक्तम्' (आ. श्रौ. ७ प्र १ खं १८ सू.) इतिसूत्रे धूर्तस्वामिना 'आरोहं तस्मै वृश्चेत्' इति ब्राह्मणश्रूयमाणारोहपदस्य णमुलन्तताभिप्रायेण 'आरोहं आरुह्य यश्छिद्यते' इत्युक्तमित्यभिप्रेत्य रुद्रदत्तेन 'आरोहमिति णमुलन्तमिति केचित्; तदयुक्तम्—एष वै वनस्पतीनामप्रतिष्ठित इति प्रतिष्ठितं वृक्षाधिरूढ इति लिङ्गात् स्वरवशाच्च। अत एव चोक्तं सूत्रकृता समे जातमशाखाजं चेति, इति ग्रन्थेन आरोहपदस्य णमुलन्तताभिप्रायको धूर्तस्वामिभाष्यग्रन्थः खण्डितो दृश्यते।

एवं ५४३ तमे पुटे—'एतान्येव द्विः' (आ. श्रौ. ८ प्र २२ खं १३ सू.) इति सूत्रे धूर्तस्वामिना पञ्चसांवत्सरिकाणां चातुर्मास्यानां द्विरभ्यासेन दशवार्षिकतासिद्धिरित्युपदेशश्च इत्यभिप्रेत्य 'उपदेश एतान्येव द्विरिति, दशापि लभ्यन्ते' इत्युक्तम्। तत्रैव रुद्रदत्तेन तु 'दशवार्षिकता न सिध्यति, अवचनात्' इति तद्विपरीतमभिहितं दृश्यते।

इत्थं तत्र तत्र बहुत्र धूर्तस्वामिरुद्रदत्तयोराशयभेदो दृश्यत इति तत्सर्वं विमर्शकैर्विमर्शनीयमिति दिङ्मात्रं सूचयित्वा विस्तरभयाद्विरम्यते ।

## एतद्ग्रन्थपरिशीलनसौकर्योपकल्पनम्

अत्रान्ते प्रेक्षावतां सौलभ्यार्थमेतत्संपुटपरिदृश्यमानानामापस्तम्बश्रौतसूत्राणामकारादिवर्णक्रमानुरोधिनी सूचनी न्यवेशि ।

तथाऽऽदौ श्रौतसूत्रतद्भाष्यतद्वृत्तिगता विषयाश्च विषयसूचन्यां नातिविस्तरं यथामति समगृह्यन्त। धूर्तस्वामिभाष्ये तद्वृत्तौ चोपात्तानां ग्रन्थतत्कर्तृनाम्नां चाकारादिक्रमेण सूचनी निरदेशि ।

मुद्रिताया अपि रुद्रदत्तवृत्तेरधुना दौर्लभ्यात्सोऽपि रुद्रदत्तवृत्तिग्रन्थोऽत्र यथासूत्रं तत्रतत्राधस्तात्समयोजि। एतत्सूत्रभाष्यवृत्तितत्प्रणेत्रादिविषये वक्तव्यांशस्सर्वोऽपि प्रथम एव संपुटे निरूपित इति न पुनस्तन्निरूपणमपेक्षितामिति विरम्यते।

## एतद्ग्रन्थसंशोधनायावलम्बिता एतत्संस्थागता आदर्शकोशाः

I. सूत्रपाठस्य—2299, 2682, 3758, 4451 संख्याङ्कितास्तालकोशाः

A 429, C 1442 संख्याङ्कितौ काकलकोशौ

II. धूर्तस्वामिभाष्यस्य—B 11, B 12, C 1369 संख्याङ्किताः काकलकोशाः

2320, 2690 संख्याङ्कितौ तालकोशौ

III. धूर्तस्वामिभाष्य-रामाग्निचिद्वृत्त्योः—1128, 2280 4346, संख्याङ्कितास्तालकोशाः

A 549 संख्याङ्कितः काकलकोशः

IV. रुद्रदत्तवृत्तेः—एष्याटिक्संस्थया कल्कत्तानगर्यां देवनागरलिप्यां मुद्रितः कोशः

## उपसंहारः

इत्थं निर्दिष्टादर्शकोशावलम्बनेनास्मिन् द्वितीये संपुटे धूर्तस्वामिभाष्यरामाग्निचिद्वृत्तिभ्यां सह षष्ठप्रश्नप्रभृत्यष्टमप्रश्नान्तस्यापस्तम्बश्रौतसूत्रभागस्य मुद्रणं संसाधितम् ।

प्रायश इदानीं यज्ञानुष्ठानस्य तदवबोधकग्रन्थानां च प्रचारवैरल्यात् तत्तद्यज्ञेतिकर्तव्यतापरिज्ञानमान्द्याच्च यथामति परिशोधितेऽप्यस्मिन्नास्माकीनेनानवधानादिना सीसकाक्षरयोजकादीनामनवधानेन च संभावितान् प्रमादान् क्षमन्तां मोदन्तां च गुणैकग्राहिणस्सहृदया याज्ञिका विपश्चित्प्रवराश्चेति सप्रश्रयमभ्यर्थ्य प्रस्तावनामेनामुपसंहरामः ॥

वाजिरूपधरो वेदान् ब्रह्मणे योऽदिशत्पुरा ।
सर्वयज्ञसमाराध्यस्सर्वात्मा स प्रसीदतु ॥

जयतु निगमवाणी ब्रह्मनिश्श्वासरूपा
जयतु तदनुबन्धी कल्पसूत्रप्रपञ्चः ।
जयतु तदवगम्यं कर्म यज्ञाभिधेयं
जयतु च बहुयज्ञैरिज्यमानो मुकुन्दः ॥

महीशूरनगरी
ता. २२-५-१९५३

इति सप्रश्रयं प्रार्थयते
सहृदयविद्वद्वशंवदः

तिरु. तिरु. श्रीनिवासगोपालाचार्यः
महीशूरराजकीयप्राच्यविद्यासंशोधनसंस्था-
प्रधानपण्डितः.

# आपस्तम्बश्रौतसूत्रधूर्तस्वामिभाष्य-रामाग्निचिद्वृत्त्योः-
# विषयसूचनी

## षष्ठः प्रश्नः १–१५३ पृष्ठानि

### प्रथमः पटलः—प्रथमा खण्डिका


| विषयः | पृष्ठसंख्या |
|---|---|
| (भा) अग्निहोत्रशब्दप्रवृत्तिनिमित्तं, तत्र प्रमाणं च .... | 1 |
| ,, अग्निहोत्रशब्दगौणार्थप्रदर्शनम् .... | 1 |
| (वृ) अग्निहोत्रशब्दार्थस्य सायंप्रातराहुतिद्वयसाधारण्याविरोधः | 1 |
| ,, अग्निहोत्रशब्दनिर्वचनलभ्यार्थः .... .... | 2 |
| ,, भाष्यस्थाधिकारशब्दार्थः .... .... | 2 |
| ,, अग्निहोत्रशब्देन गोर्निर्देशस्थलम् .... .... | 2 |
| (भा) सूत्रगताग्निहोत्रकालनिर्देशकशब्दविवरणम्, तद्गतोपवेषशब्दार्थश्च | 2 |
| ,, अग्न्यभिमन्त्रणे विशेषकथनम्, सूत्रस्थगार्हपत्यपदकृत्यं च | 3 |
| ,, उद्घाटितस्यापि, बोधनं कार्यम्, तत्प्रयोजनं च .... | 3 |
| ,, तत्रोपदेशपक्षः .... .... .... | 3 |
| (वृ) सूत्रेऽग्निहोत्रपूर्वावधिकालमात्रनिर्देशोऽपि तदुत्तरावध्यवगतौ प्रमाणम् | 3 |
| ,, प्रातरग्निप्रणयनकालः तत्र प्रमाणं च .... | 4 |
| ,, उदितप्रायश्चित्तव्यवस्था .... .... | 4 |
| ,, अभिमन्त्रणानन्तरं मन्त्रेण वीक्षणे प्रमाणम् .... | 4 |
| ,, गार्हपत्यपदस्य धृष्टिनिवर्तकत्वोपपत्तिः .... | 4 |
| ,, नित्यवद्बोधनविधेः पर्यवसानम् .... .... | 4 |
| (भा) उद्धरेत्येवेति सूत्रस्थावधारणाशयः .... | 5 |
| (वृ) भाष्यस्थावधारणाशयविवरणम् .... | 5 |
| (भा) पक्षभेदेन सौत्रकामधुगवरोधोक्तथाशयस्य कथनम् | 5 |

| विषयः | पृष्ठसंख्या |
|---|---|
| (वृ) तस्यार्थवादत्वपक्षाशयः .... .... | 6 |
| ,, तत्रोपदेशपक्षाशयः सूत्रस्वारस्यप्रदर्शनं च .... | 6 |
| (भा) सायंप्रातर्मन्त्रयोर्भेदः .... .... | 7 |
| (वृ) 'रात्र्या' इत्यादिमन्त्रैकदेशाविनियोगस्य सूत्रतः प्रतीत्या प्रातर्होमे भूर्भुवस्सुवरित्यादिसमग्रमन्त्राप्राप्तिरिति शङ्का तत्परिहारश्च | 7 |

द्वितीया खण्डिका

| | |
|---|---|
| (भा) आयतनेऽग्निप्रतिष्ठापनविधिः अग्न्यगारादिध्माहर्तृत्वं यजमानस्यैव | 8 |
| (वृ) अरण्यात्तदानीमिध्माहरणानवसरः .... | 8 |
| ,, सूत्रस्थस्वयंशब्दस्य इध्माहरणे संभावितकर्त्रन्तरप्रतिषेधपरत्वम् | 8 |
| (भा) प्रतीध्ममिध्माधाने मन्त्राः, तत्र हेतुश्च .... | 9 |
| (वृ) इध्मानिति सूत्रे बहुवचनस्य बह्वग्नीध्मपरत्वम्, न त्वेकैकाग्नीध्मपरत्वम् | 9 |
| (भा) सौत्रवर्षिष्ठपदार्थः .... .... .... | 9 |
| ,, तत्रोपदेशपक्षः .... .... .... | 9 |
| (वृ) वर्षिष्ठपदस्य बह्वर्थपरत्वबोधकप्रमाणाशयविवरणम् | 9 |
| (भा) इध्माधाने क्रमः, तत्र पक्षान्तरं च .... .... | 10 |
| (वृ) तत्र हेतुप्रदर्शनम्, पक्षान्तराशयकथनं च .... | 10 |
| (भा) भूमौ यथा न पतेत्तथाऽग्नावेव इध्माधानम् .... | 10 |
| (वृ) तथाग्निरित्यादिसूत्रे योगविभागेन सूत्रार्थकथनम् उपदेशपक्षे एकसूत्रत्वं च | 10 |
| (भा) गार्हपत्याहवनीयाग्न्योरन्तरागमननिषेधः, तस्य सर्वाग्निविषयकत्वपक्षश्च । | 11 |
| ,, क्वचिदग्निमध्येऽपि संचाराभ्यनुज्ञा .... .... | 11 |
| (वृ) पश्चाद्धीतिसूत्रोक्तहेतूपपत्तिः .... .... | 11 |
| ,, उक्तहेतोस्साफल्योपपत्तिः .... .... | 12 |
| ,, अग्निमध्ये संचरणे प्रायश्चित्ते मानम् .... | 12 |

विषयः पृष्ठसंख्या


(भा) अग्निमध्ये संचरणाभ्यनुज्ञाया आशयकथनम् .... 12
(वृ) भाष्योक्ताभ्यनुज्ञाशयविवरणम् .... .... 12
,, सामान्यनिषेधाशयः, अतिक्रमे प्रायश्चित्तं च .... 12
(भा) सायंप्रातः प्रतिष्ठापनविध्यविरोधेन नक्तधारणोपपत्तिः 13
(वृ) नक्तधारणे होमद्रव्यार्थसंकल्पोपपत्तिः .... 13
,, नक्तधारणवैकल्पिकत्वोपपत्तिः .... .... 13
(भा) गतश्रीधार्यविशेषः, मुनिमतभेदाश्च .... 13
(वृ) दक्षिणाग्न्यादीनां पुनःपुनराहरणोपपत्तिः .... 14
,, सर्वविधाधानासिद्धस्यापि भारद्वाजाद्युक्तं धारणम् .... 14
(भा) गार्हपत्यस्य नित्यधारणम्, धार्याणामनुगतौ मन्थनं च 14
,, गार्हपत्याहवनीयाभिन्नाग्नीनां स्वयोनेरुत्पत्तिः .... 14
(वृ) भाष्यस्थधार्याणामित्यत्र बहुवचनोपपत्तिः .... 15
(भा) अधारणपक्षे तत्संप्रतिपत्तिप्रकारः .... .... 15
(वृ) अहरहराहरणपक्षतदन्यपक्षयोर्विवरणम् .... 15
(भा) आहरणविषये व्यवस्था .... .... 16
,, नवावसानाहरणप्रकारः, तत्र मतिभेदश्च .... 16


## तृतीया खण्डिका


(भा) परिसमूहनालंकरणपदार्थः, अध्वर्युकर्तृकालंकरणे पत्नी-यजमानयोर्मन्त्रवर्जं सहकारित्वं च 17
(वृ) प्रधानभूताध्वर्युकर्तृकाग्न्यलंकरणस्य समन्त्रकत्वम् 17
(भा) पुरस्तादुपरिष्टाच्चालंकाराणां कालविशेषाभिधानं, तत्र पक्षभेदाश्च 17
,, परिस्तरणे पक्षभेदः .... .... .... 18
(वृ) सर्वपरिस्तरणपक्षस्योपपत्तिः .... .... 18
,, सभ्यावसथ्ययोः परिस्तरणाभावपक्षे युक्तिप्रदर्शनम् 18
(भा) अग्निहोत्रार्थस्रुवस्य पैष्टिकादन्यत्वम् .... 18
,, स्रुवस्वरूपं, तन्निर्माणक्रमश्च .... .... 19
,, अग्निहोत्रधेनुलक्षणम्, कर्तृक्रमकालादिकं च 19–20

विषयः पृष्ठसंख्या

चतुर्थी खण्डिका


(भा) दोहविधौ प्रतिषेध्यस्तनसंमर्शस्वरूपं .... 21
„ सन्धौ होमविधेराशयप्रकाशनम् .... .... 22
„ नक्षत्रदर्शनादयस्सायं चत्वारो होमकालाः .... 23
„ उषआदयश्चत्वारः प्रातर्होमकालाः .... .... 23
„ संगवोत्तरकालस्य आपत्कालिकता .... 24
„ स्वस्थस्यापदि गौणपरिग्रहेऽपि न मुख्यत्यागनिमित्तं प्रायश्चित्तम् 24
„ स्वस्थस्य गौणकालपरिग्रहप्रतिषेधः, आपत्पदार्थश्च 25
„ होमसंकल्पे कालविशेषोत्कीर्तनस्यावश्यकत्वम् .... 25
„ विहरणवर्जानामङ्गानामनुष्ठानकालः .... .... 25
„ सायंहोमेऽकृतानां समिदाधानपरिस्तरणदोहनानां प्रातरनियमः 25
(वृ) प्रातरनियमोक्तिफलं, विहरणस्य कालश्च .... 26


इति प्रथमः पटलः

---

अथ द्वितीयः पटलः—पञ्चमी खण्डिका


(भा) अग्निहोत्रे पत्नीसंबन्धस्यावश्यकत्वम् .... 26
„ सूत्रगतस्यास्येतिपदस्याशयः .... .... 26
(वृ) अपत्नीकाग्निहोत्राभ्यनुज्ञापरबह्वृचब्राह्मणाशयः .... 27
„ सौत्रास्येतिपदविवरणपरभाष्यस्य विवरणम् .... 27
(भा) पत्न्युपवेशनस्थानं, तत्र मतभेदश्च .... .... 27
(वृ) भाष्यदर्शितमतभेदाशयप्रकाशनम् .... 28
(भा) आचमनप्रकारः, तत्र विशेषश्च .... .... 28
„ अग्निपरिषेकक्रमः, सभ्यावसथ्ययोः परिषेकाभावश्च 28
„ गार्हपत्यमारभ्योदकधारास्रावणविधिः .... 29
(वृ) धारास्रावणकालविशेषे मन्त्रोच्चारणविध्याशयः .... 29
(भा) व्यन्तकरणानन्तरजप्यमन्त्रे ऊहपक्षविमर्शः .... 29

| विषयः | पृष्ठसंख्या |
|---|---|
| (वृ) आयतनाद्बहिर्नयनरूपव्यन्तकरणे प्रमाणम्, काचिदायतन एवोद्दूनयनं च | 30 |
| ,, ऊहनिराकरणपरभाष्याशयः .... .... | 30 |

षष्ठी खण्डिका

| | |
|---|---|
| (भा) इडायाः पदमित्यधिश्रयणमन्त्रे जातवेदःपदेन गार्हपत्याभिधानम् | 30 |
| (वृ) प्रातर्होमेऽग्निदेवताभावेऽपि नोहः .... | 30 |
| (भा) अग्निहोत्रे शृताशृतहविर्विधिः .... | 31 |
| ,, सौत्रसमुदन्तशब्दः शृताशृतार्थकः, तत्स्वरूपं च | 31 |
| ,, प्रतिषेकविधिः, तत्कर्तव्यतायां हेतुः .... | 31 |
| (वृ) सूत्रभाष्यस्थतुस्तूर्षमाणपदविवरणम् .... | 32 |
| ,, आज्यादीनां काम्यसाधनत्वम्, नित्याधिकारिणोऽपि दुरितक्षयकामनाया अविरोधश्च | 32 |
| (भा) ईषदधिश्रितस्य प्रतिषेकपक्षः .... | |
| (वृ) उदन्तीकृतेषदधिश्रितयोः प्रतिषेकयौगपद्यायोगपरिहारः | 32 |
| (भा) ज्वलत्तृणज्योतिषा हविरवेक्षणे प्रमाणम् .... | 32 |
| (वृ) अभिद्योतनादिश्रुतेरवेक्षणकार्यसिद्धिः .... | 33 |
| (भा) स्रुवेण प्रतिषेकः .... .... .... | 33 |
| ,, पुनरवेक्षणपर्यग्निकरणवर्त्मकरणादिकम् .... | 34 |
| (वृ) त्रिःप्रतिष्ठापने विशेषाभिधानम् .... | 34 |

सप्तमी खण्डिका

| | |
|---|---|
| (भा) प्रतिद्रव्यादानं मन्त्रावृत्तिः .... .... | 35 |
| ,, स्रुक्स्रुवयोस्सहादानपक्षः, प्रतितपनसंस्पर्शनयोर्यौगपद्यं च | 35 |
| (वृ) तत्र हेतूपपादनम् .... .... .... | 35 |
| (भा) यजमानासन्निधाने स्वयं होमेऽप्यात्मनोऽनुज्ञानावश्यकत्वम् | 35 |
| (वृ) उक्तानुज्ञानस्यावश्यकत्वोपपादनम् .... | 35 |

| | विषयः | | | पृष्ठसंख्या |
|---|---|---|---|---|
| (भा) | उन्नयने आहोमं वाग्यमाधिकारिकथनम् तत्र यजमानस्य चक्षुर्निमीलनोपवेशनयोर्निषेधश्च | | | 36 |
| ,, | उन्नयने काम्यकल्पाः | .... | .... | 36 |
| ,, | कामयितरि पक्षभेदः | .... | .... | 37 |
| (वृ) | उक्तपक्षयोरुपपत्तिप्रदर्शनम् | .... | .... | 37 |


अष्टमी खण्डिका


| | | | | |
|---|---|---|---|---|
| (भा) | सूत्रोक्तनियमनस्वरूपे पक्षभेदः | .... | .... | 39 |
| (वृ) | भाष्योक्तपक्षभेदाशयप्रकाशनम् | | .... | 39 |
| (भा) | सादनधारणोपावहरणानि | .... | .... | 40 |
| (वृ) | तत्र प्रमाणाभिधानम् | .... | .... | 40 |


इति द्वितीयः पटलः

---

अथ तृतीयः पटलः—नवमी खण्डिका


| | | | | |
|---|---|---|---|---|
| (भा) | अग्न्यवस्थाभेदेन होमफलभेदाः | .... | .... | 41 |
| (वृ) | तत्तत्कल्पेषु हेत्वपेक्षितांशपरिपूरणादिकम् | | .... | 42 |
| (भा) | होमे स्वपक्षः | .... | .... | 42 |
| ,, | विद्युदसीत्यपामुपस्पर्शनस्य कालः, समिधां स्वरूपादि, तदाधानविषये मतिभेदश्च | | | 43 |
| (वृ) | उपस्पर्शनकालनियमोपपत्तिः | .... | .... | 43 |
| ,, | समिधां पालाशत्वसाधनविवरणम् | | .... | 43 |
| ,, | द्वितीयसमिन्नियमोपपत्तिः | .... | .... | 44 |
| ,, | तस्यामेवेति भाष्यग्रन्थाशयः | .... | .... | 44 |
| ,, | आहुतिद्वयाधारसमित्संख्या, तत्र पक्षभेदश्च | | .... | 44 |
| ,, | भाष्योक्तकेचित्पक्षाशयविवरणम् .... | | .... | 44 |


दशमी खण्डिका


| | | | | |
|---|---|---|---|---|
| (भा) | सौत्रप्राण्यादिशब्दार्थः, समिदाधानात्पूर्वं परतश्च कर्तव्यक्रमश्च | | | 45 |
| (वृ) | कर्तव्यानां स्रुग्ग्रहणपूर्वकत्वे प्रमाणप्रदर्शनम् | | .... | 45 |

| विषयः | पृष्ठसंख्या |
|---|---|
| (वृ) ध्यानात्पूर्वमभिक्रमणोक्तेराशयः, ध्यानेऽधिकारि-कथनं च | 45 |
| (भा) सूत्रस्थमहच्छब्दार्थः, महद्वीक्षणानन्तरकालिक-कर्तव्यनिर्देशः, सूत्रे हुत्वेति पुनरुक्तेः फलं च | 46 |
| ,, होमाधिकरणविशेषनिर्देशः .... .... | 46 |
| (वृ) ज्वलितायां होमे भाष्यस्थविशेषविवरणम् .... | 46 |
| (भा) समिदुपरिहोमे विशेषः .... .... | 46 |
| ,, सूत्रस्थाभिक्रामावक्रामशब्दार्थः, अभिक्रामहोम-विषये मतिभेदाश्च | 47 |
| ,, सूत्रे पुनर्होष्यत्पदोपादानप्रयोजनम् .... | 47 |
| ,, सूत्रोक्तावमार्जनप्रकारः, तत्र प्रकारान्तरसंभवश्च | 48 |
| ,, लेपनिमार्गस्रुक्सादनयोरेकाधिकरणकत्वम् .... | 48 |
| ,, पतीक्षणे समिदेकत्वपक्षः, समिद्द्वयपक्षे विशेषाभि-धानं च | 48 |

एकादशी खण्डिका

| | |
|---|---|
| (भा) सामिद्नाभिहोमे आहुतिदेशः, तत्र पक्षान्तरं, आहु-तिप्रमाणं च | 49 |
| ,, 'हुत्वा स्रुचं' इति सूत्रस्थहुत्वापदप्रयोजनम्, तत्र-त्योद्वहणातिवल्गनपदार्थश्च | 49 |
| ,, लेपावमार्गे प्राचीनावीतित्वं, सूत्रस्थहुत्वाऽप इत्यत्र-हुत्वापदकृत्यं, लेपप्राशनादिविधिश्च | 50 |
| ,, सूत्रचोदिताचमनस्य प्राशनरूपत्वम्, पश्चात्स्मार्त शुद्ध्यर्थमाचमनम् | 51–52 |

द्वादशी खण्डिका

| | |
|---|---|
| ,, प्रातर्मन्त्रसंनामः, तत्र मतिभेदश्च .... | 52 |
| ,, स्रुगवलेहनाद्यग्निहोत्रहवणीप्रक्षालनान्तकर्मविधिः | 52 |
| ,, हस्तेन होमपात्राणां क्षालननिषेधः, .... | 53 |
| (वृ) दर्भाणामितरेषां वा पात्रक्षालनसाधनत्वम् .... | 53 |
| (भा) सूत्रोक्तोत्सेकस्वरूपम्, तद्विधाने साधनं च .... | 54 |

| विषयः | पृष्ठसंख्या |
| --- | --- |
| (वृ) पत्न्यञ्जलिनिनयननियुक्ते गृहेभ्यस्त्वेति मन्त्रे गृह-पदार्थः, तत्र पक्षान्तरं च | 54 |
| (भा) पत्न्यभावे तदायतने निनयनम् .... .... | 54 |
| (वृ) सूत्रोक्तपत्न्यभाव आर्तवादिना तदसंनिधानरूप एव | 54 |
| ,, सूत्रोक्तपत्न्यायतनपदविवक्षितदेशकथनम् .... | 55 |
| ,, यजमानपत्न्यर्थकः पत्नीशब्द इत्युपदेशपक्षोप-पत्तिप्रदर्शनम् | 55 |
| (भा) स्रुचि हस्तप्रक्षेपविधिः, तत्र स्रुग्घस्तान्यतरप्रता-पनमभिमतम् | 55 |
| (वृ) पश्चात्प्रदक्षिणमावर्तते इति भाष्यस्य उपपत्ति-कथनम् | 56 |

इति तृतीयः पटलः

---

अथ तुर्यः पटलः—त्रयोदशी खण्डिका

| | |
| --- | --- |
| (भा) गार्हपत्यहोममन्त्रव्यवस्था .... .... | 57 |
| (वृ) लेपप्राशनहोमयोः क्रमव्यस्था .... .... | 57 |
| (भा) दीदिहीत्यादय उपसमिन्धनमन्त्राः, तत्र पक्षभेदश्च | 58 |
| (वृ) आहुतिप्राधान्ये मतिभेदः, उपसमिन्धनपदस्य मन्त्रार्थकत्वे व्युत्पत्तिकथनम् | 59 |
| (भा) अग्निसमिन्धने क्रमः, निनयनसमुचितो देशश्च .... | 59 |

चतुर्दशी खण्डिका

| | |
| --- | --- |
| (भा) परिषेचने धाराप्रतिषेधः, तस्या अवसरश्च .... | 60 |
| ,, अग्निहोत्रावधिः, तत्र पक्षभेदः, तृणप्रहरणे कालश्च | 61 |
| ,, बर्हिःप्रहरणनिषेधः, तत्र हेतुः, तत्सार्थक्यकथनं च | 61 |
| ,, शिरस्यद्भिर्मार्जनाविधिः, तत्र क्रमः, पक्षान्तरं च | 62 |
| (वृ) भाष्योक्तमार्जनक्रमपक्षभेदाशयः .... .... | 62 |
| (भा) पशुकामाविषयेऽग्निहोत्रे विशेषः .... .... | 62 |

| विषयः | पृष्ठसंख्या |
|---|---|
| (भा) याजमानावृत्तिः, अभिमन्त्रणाभिमर्शनयोरूहानूहपक्षौ | 62 |
| (वृ) अनूहपक्षस्योपपत्तिः .... .... | 63 |
| ,, ऊहपक्षाशयः .... .... .... | 63 |
| (भा) दोहनाधिश्रयणे विशेषः .... .... | 63 |
| ,, पशुज्वरशान्तिकामनायां विधिः .... .... | 63 |
| ,, कामनाकालः .... .... .... | 64 |
| (वृ) 'द्वयोः पयसा' इत्यादेः गुणफलविधित्वकथनम् | 64 |
| (भा) नैमित्तिककरणेऽपि फलानिष्पत्तौ कारणम्, पूर्वोत्तराहुत्योर्मन्त्रभेदश्च | 64 |
| (वृ) भाष्योक्तफलानिष्पत्तिहेतोर्विवरणम् .... | 65 |
| (भा) कृतेऽपि नैमित्तिके पशुक्षयानुवृत्तौ विशेषः .... | 66 |
| ,, सायंप्रातर्होमसमुदायस्याग्निहोत्रनामधेयता, अग्निहोत्रस्य सायमुपक्रमत्वमिति सौत्रपक्षः, मीमांसकपक्षे प्रत्येकमाग्निहोत्रत्वं, तस्य सायमुपक्रमत्वानियमश्च | 66 |
| (भा) नैमित्तिककरणेऽपि सर्वथाऽप्यशान्तौ विरतिः, .... शान्तिकर्मनैरर्थक्यपरिहारश्च .... .... | 66 |
| (वृ) एककार्योत्पादकत्वेन सायंप्रातर्होमसमुदायस्याग्निहोत्रत्वं, तस्य सायमुपक्रमत्वं, सायमेव कामसंकल्पो द्रव्यनियमश्च | 67 |
| ,, प्रत्येककर्मनामधेयतापरमीमांसकपक्षाशयः .... | 67 |
| ,, शान्तिकर्मणाऽप्यपरिहार्यानिष्टसंभवे शान्तिकर्मणः फलाभिधानम् | 68 |


पञ्चदशी खण्डिका


| | |
|---|---|
| (भा) नित्येऽपि पयोहोमे पशुकामना, सौत्राणां इन्द्रियादिपदानां विवरणं च | 69 |
| ,, यवागूमांसयोरेवाधिश्रयणप्रतिषेधौ, न दध्याज्यतण्डुलौदनसोमानाम् | 70 |

| विषयः | पृष्ठसंख्या |
|---|---|
| (भा) अधिश्रयणप्रतिषेधसिद्धस्यापि प्रतिषेकप्रतिषेधस्य पुनरुक्तौ प्रयोजनम्, तत्रोपदेशपक्षश्च | 71 |
| „ तेजस्कामहोमे कामनायां विशेषः .... | 71 |
| „ क्षत्रियस्याग्निहोत्रहोमनिषेधः, तथाऽप्यग्नेर्धार्यत्वं होमप्रत्याम्नायेन तत्फलसिद्धिश्च | 72 |
| „ क्षत्रियोऽध्वर्युणाऽग्न्युपस्थानमन्त्रं वाचयितव्यः, समिदाहरणादि मार्जनान्तमपि कर्मेत्युपदेश पक्षश्च | 73 |
| „ सोमयाज्यादिक्षत्रियविशेषस्याग्निहोत्रहोमाभ्यनुज्ञा, | 73 |
| „ कालद्वयेऽपि यजमानेन स्वयंहोमस्य कर्तव्यता .... | 74 |
| (वृ) सौत्राहरहस्सायंशब्दार्थकथनपरभाष्यस्य फलप्रद-र्शनपूर्वकमाशयाविष्करणम् | 74 |
| (भा) पर्वसन्धौ वा यजमानेन होतव्यं, स्वाध्याप्येन क्षीर-होत्रा वा हावयितव्यं | 75 |
| (वृ) भाष्यप्रदर्शितपक्षेषु हेतुप्रदर्शनम्, ब्रह्मचारिक्षीर-होतृशब्दतात्पर्यं च | 75 |


इति तुर्यः पटलः

---

अथ पञ्चमः पटलः—षोडशी खण्डिका


| | |
|---|---|
| (भा) अग्न्युपस्थानाधिकारप्रयोजनम् .... .... | 76 |
| (वृ) प्रत्यगाशिषामुपस्थानाङ्गतायां हेतुप्रदर्शनम् .... | 76 |
| „ सर्वयाजमाननिवृत्तेरुपस्थानाधिकारफलत्वोपपत्तिः | 76 |
| (भा) उपस्थानविषये विशेषप्रदर्शनम्, सौत्रकवातिर्यक्श-ब्दार्थश्च | 77 |
| (वृ) कवातिर्यङित्यस्य पार्श्वेनोपस्थानमित्यर्थे भवस्वामि-संमतिः | 78 |
| (भा) ममाग्ने इत्यादीनां चतसृणां नोपस्थानार्थत्वं किंतु जपार्थत्वम्, तत्र हेतुश्च | 79 |

| विषयः | पृष्ठसंख्या |
|---|---|
| (वृ) भाष्यस्थजपित्वेतिपदप्रयोजनम् ... .... | 79 |
| (भा) संवत्सरान्तोपस्थानाविधिः, सहोपस्थानविधिश्च.... | 79 |
| (वृ) संवत्सरे संवत्सर इति वीप्सासाफल्योपपत्तिः .... | 80 |
| ,, सदोपस्थानपक्षे न मासान्तोपस्थानम्, तत्रोपपत्तिश्च | 80 |
| (भा) समानतन्त्रेण पवमानहविषां संवत्सरान्ते प्रत्याम्नायतया निर्वाप्यता | 80 |
| ,, प्रातस्सायमुपस्थानयोर्विशेषः तत्रोपदेशमतं च .... | 81 |
| (वृ) भाष्यप्रदर्शितादिमपक्षोपपत्तिः, उपदेशपक्षाशयश्च | 81 |
| (भा) 'इन्धानास्त्वा' इत्युपस्थानाननरं समिदाधानादिकम् | 82 |
| **सप्तदशी खण्डिका** | |
| (वृ) भूरादीनामुपस्थाने तदाभिमुख्यम् .... | 83 |
| (भा) वत्साभिमर्शनम्, तत्र व्यवस्था च .... | 83 |
| ,, द्विपदाभिरुपस्थाने विशेषः प्राजापत्यत्यृचेनाहवनीयस्यैवोपस्थानं च | 84 |
| (भा) स्वस्त्यागमनादिकामनयामीक्षणप्रकारः .... | 85 |
| **अष्टादशी खण्डिका** | |
| (भा) 'मा नश्शंसः' इति दशभिराहवनीयस्यैवोपस्थानम् | 85 |
| ,, निहीनसदृशाधिकैः स्पर्धायां कर्तव्यक्रमः, सर्वलोकोपस्थानदिगुपस्थानक्रमश्च | 86–77 |
| **एकोनविंशी खडिका** | |
| (भा) 'धर्मो मे' इत्याहवनीयस्यैवोपस्थानम्, सर्वेषामुपस्थानामिति पक्षद्वयम् | 88 |
| (वृ) सर्वेषामुपस्थानमिति पक्षे हेतुकथनम् .... | 88 |
| (भा) उपस्थानानन्तरमेव फलापेक्षणं कार्यम् .... | 88 |
| ,, उपस्थानविधिनिषेधपरश्रुतिद्वयाशयः .... | 88 |
| (वृ) अनुपस्थानदृष्टान्ते हेतोस्संगमनम् .... | 89 |
| ,, उपस्थानस्य विहितप्रतिषिद्धत्वाद्वैकल्पिकत्वमिति पक्षः, निन्दाया उत्तरविधिप्रशंसार्थत्वाद्विधित्वमेवेति पक्षश्च | 90 |

| विषयः | पृष्ठसंख्या |
|---|---|
| (भा) अहरहरुपस्थानमहिमा .... .... | 90 |
| ,, नक्तमेवोपस्थानविधेः प्रातरुपस्थानवर्जं याजमानान्तं कर्म | 90 |
| (वृ) न प्रातरिति निषेधस्य पक्षप्राप्तानुवादकत्वमेवेति भवदासपक्षः, निषेधकत्वपक्षान्तरं च | 90 |
| (भा) वाजसनेयशाखानुरोधेन प्रातर्याजमानान्तराणां आहिताग्निव्रतानां च निवृत्तिपक्षः | 91 |
| (वृ) न प्रातरित्यादिसूत्रविवरणम् .... .... | 91 |
| (भा) उपस्थानविषये वाजसनेयिनां मतम्, तत्रैवान्यपक्षद्वयं च | 91–92 |
| (वृ) भाष्योक्तपक्षान्तराशयविवरणम् .... .... | 92 |
| (भा) वात्सप्रगोसूक्ताश्वसूक्तानामुपस्थाने विनियुक्तानां निर्देशः | 93 |

इति पञ्चमः पटलः

---

अथ षष्ठः पटलः

विंशीप्रभृतित्रयोविंश्यन्ताः खण्डिकाः

| | |
|---|---|
| (भा) 'ममाग्ने' इत्यादिभिः जपप्रातिषेकादिकर्मकलापः | 93–97 |
| ,, प्रतिषेके पक्षद्वयम् तत्तन्मन्त्रैः करणीयेषु विशेषश्च | 91 |
| (वृ) प्रतिषेके भाष्यप्रदर्शितपक्षद्वयस्य तत्तन्मन्त्रैः करणीयेषु भाष्यप्रदर्शितविशेषाणां च विवरणम्। | 98 |

इति षष्ठः पटलः

---

अथ सप्तमः पटलः—चतुर्विंशी खण्डिका

| | |
|---|---|
| (भा) अशित्वा प्रवासे अनशित्वाप्रवासे च कर्तव्यविधिः तत्र पक्षान्तरं, तत्खण्डनं प्रवासे अधार्याग्नित्यागश्च | 101 |

पञ्चविंशी खण्डिका

| | |
|---|---|
| (भा) प्रवासोपस्थानविधिः, तत्र पक्षभेदः, प्रवासपदार्थश्च | 103 |

विषयः | पृष्ठसंख्या

(वृ) भाष्योक्तार्थेषु हेतूपन्यसनम् .... ... 103
(भा) प्रवासे उपस्थानसंभवे कर्तव्यक्रमः, प्रत्याम्नायपक्ष-निरासश्च 104
(वृ) भाष्योक्तप्रवासहेतोरुपलक्षकत्वम्, भाष्योक्तप्रत्याम्नायपक्षखण्डनप्रकारविवरणम् । 104
(भा) प्रोषितागतकर्तव्यम्, वाग्यमविधिश्च .... 105-6
(वृ) भाष्योक्तच्छदिर्दर्शपदार्थविवरणम्, तत्र प्रमाणं च 106
(भा) प्रवासादागतेन कर्तव्यमग्निप्राणनज्वलदुपस्थानादि 106-7

षड्विंशी खण्डिका

(भा) अन्नयपाननाद्युपस्थानान्तकर्मकलापः ....
(वृ) समिदाधानोपस्थानादौ क्रमे पक्षान्तरम् .... 108-9

सप्तविंशी खण्डिका

(भा) प्रवत्स्यता आगतेन च कर्तव्यं उपस्थानं, तत्र वाजसनेयिबह्वृचानां मतं च 110-11
,, प्रोष्यागतेन कर्तव्यस्य जपस्य विधिः .... ,,

इति सप्तमः पटलः

---

अथ अष्टमः पटलः—अष्टाविंशी खण्डिका

(भा) 'सगृहः प्रयास्यन्' इति सूत्रस्थगृहपदार्थः, तत्र पक्षान्तरं, अत्यन्तप्रवास एवाग्निभिस्सह प्रवास-पक्षश्च 112-13
(वृ) गृहपदस्य कर्मार्थकत्वपक्षे भाष्योक्ते प्रमाणप्रदर्शनम् 113
,, दम्पत्योः प्रवासेऽपुनरावृत्तावेवाग्निभिस्सह प्रवास इति केषांचित्पक्षस्य आशयः 113
,, किंचित्कालप्रवासे पुनरागमनसंभवेऽग्नीनामचाल-नीयतायां हेतुप्रदर्शनम् 113
(भा) प्रवत्स्यता होमात्पूर्वमेव कुटुम्बार्थानां भाण्डादीनां प्रवाह्यताऽपोद्धार्यता वा 114

| विषयः | पृष्ठसंख्यां |
|---|---|
| (भा) पञ्चादिरात्रिप्रवासे वास्तोष्पतीयहोमविधिः .... | 115 |
| (वृ) प्रवासहोमे सङ्कल्पविधानम् .... | 115 |
| (भा) सङ्कल्पितकालमध्येऽनुपपत्तौ विशेषाभिधानं, 'न हीनमन्वाहरेयुः' इति सूत्रस्योत्कृष्य व्याख्यानं, च | 116 |
| „ दशोषितवाक्याविरोधसमर्थनम् , 'नवरात्रवास्तौ' इति सूत्रारम्भफलकथनं च | 116 |
| „ 'न हीनमन्वाहरेयुः' इति सूत्रस्य उत्कृष्य व्याख्याने प्रयोजनकथनम् | 116 |
| (भा) 'दक्षिणो युक्तः' इत्यस्य व्याख्याद्वयं, तत्तदुपपत्तिश्च | 117 |
| (वृ) व्याख्याद्वयप्रदर्शकभाष्याशयः .... .... | 117 |
| (भा) वास्तोष्पत इति मन्त्रद्वयेनैको होमः, अत्राग्निप्रणयनतदभावपक्षौ, सूत्रयोजनान्तरनिरासश्च | 118 |
| (वृ) वास्तोष्पत इति प्रथममन्त्रस्य अनुद्रवणत्वाभ्युपगमाद्धोमस्य दर्विहोमतोपपत्तिः | 119 |
| (भा) अग्नेररण्यारोपे अरणिधारणसमानकालिको जपः, तत्रोपपत्तिप्रकाशनं च | 119 |
| „ आधानक्रमेणाग्नीनामात्मसमारोपणम्, तत्र आपस्तम्बमते स्नानाचमनादावविरोधः | 120 |
| (वृ) 'या ते अग्ने' इति मन्त्रस्य हस्तप्रतापनार्थत्वमुखसमीपनयनार्थत्वपक्षौ | 120 |
| „ समारूढाग्नेर्यजमानस्य शुद्ध्यैवाग्निशुद्धिः, उपावरोहणानन्तरमुपघातप्रायश्चित्तं कार्यमिति केषांचित्पक्षश्च | 120 |
| (भा) आत्मसमारूढाग्नेर्लौकिकतावाप्तावुपावरोहणविधिः, तत्कालः, तत्क्रमश्च | 121 |
| (वृ) भाष्योक्तापराह्णशब्दस्य प्रदर्शनार्थत्वम् .... | 122 |
| (भा) आरणिसमारूढाग्नेरुपावरोहणविधिः, तदा निवर्तमानजपकालश्च | 122 |

विषयः पृष्ठसंख्या

## एकोनत्रिंशी खण्डिका

(भा) प्रयाणात्प्रतिनिवृत्तौ प्रयातस्य देशान्तर एव वासे अवसितहोमः, तत्राग्निश्च 123
,, आग्रयणपदार्थः, तत्कर्तव्यता तदुपयोगिद्रव्यं च 123
,, आग्रयणस्य कालः .... ....
(वृ) आग्रयणशब्दप्रवृत्तिनिमित्तविवरणम्, आग्रयणशब्द-साधुता, आग्रयणमकृत्वा नवान्नप्राशननिषेध हेतुश्च 124
,, आग्रयणाकरणेऽशनसामान्यस्य निषेधपक्षः, यागीयद्रव्यस्यैव निषेध इति पक्षान्तरं च 125
,, व्रीहियवश्यामाकैर्यागस्य समानतन्त्रतापक्षे वर्षासु पक्वानां यावच्छरदं स्थापनम् 125
,, वर्षस्य तृप्तिरिति बह्वृचश्रुतेर्विवरणम् 125
,, 'पौर्णमास्यां वा' 'आमावास्यं तन्त्रम्' इत्यनयो-स्सूत्रयोस्सार्थक्यकथनम् 125
(भा) आग्रयणे पुराणव्रीहिभिरप्याग्नेययागकरणतदभाव-पक्षौ, काम्येष्टिष्वाग्नेयस्य मुख्याङ्गता, नित्येषु समृद्ध्यर्थता च 126 126
,, आग्रयणे आग्नेयस्य अङ्गताया उपपादनम्, नित्येषु काम इति भाष्याशयश्च 127
,, आग्रयणे हविर्देवतायाज्याः .... .... 128
,, 'भद्रान्नः श्रेयः' इत्यज्यानीहोमः .... 128
(वृ) 'निरुप्तं हविरिति व्याख्यातं' इति भाष्याशयः
(भा) नानाबीजयागपक्षे उलूखलादेरेकानेकत्वनिर्णयः .... 129
(वृ) सूत्रस्थप्रतिबीजं वेत्युक्तेर्भावः .... .... 129
(भा) नानाबीजयागपक्षे विनियोगभेदकालभेदादवहनन-मन्त्रावृत्तिराह्वाने तन्त्रता च 130
(वृ) भाष्योक्तकालभेदप्रयुक्तावृत्तौ उपपत्तिः .... 130
(भा) तुषोपवापस्य प्रतिबीजमावृत्तिः .... .... 130

विषयः — पृष्ठसंख्या

(वृ) तुषोपवापस्य प्रतिबीजमावृत्तौ भाष्योक्तायामुपपत्तिप्रकाशनम्

(भा) उलूखले बीजोपवापानन्तरं वाग्यमनम्, एवमेव विकृतौ च — 131

(वृ) भाष्योक्ते वाग्यमनकाले प्रमाणप्रदर्शनम् .... 131

(भा) एकतन्त्रानुबन्धिबीजविषयेऽन्यत्रापि तन्त्रावृत्त्यादिसम्भवासम्भवप्रदर्शनम् — 131

(वृ) भाष्योक्ततन्त्रावृत्त्यादौ हेतुप्रकाशनम् .... 133

(भा) अभिपूरणस्य अलङ्करणप्रत्याम्नायतया अलङ्करणमन्त्रेणैवाभिपूरणम् — 136

(वृ) अलङ्करणप्रत्याम्नायतायां हेतुः .... .... 136

(भा) अनभिपूरणपक्षः .... .... .... 136

,, होमे अभिघारणस्य द्विवारत्वैकवारत्वपक्षौ .... 136

त्रिंशी खण्डिका

(वृ) अन्वानयनस्याप्यभिघारणकार्यकरत्वोपपादनम् 137

(भा) होमप्रकारः, हस्तेन होमनिषेधः, स्यन्दे प्रायश्चित्तं च — 137–38

,, आग्रयणे दक्षिणास्वरूपम्, तत्र पक्षान्तरं, दानसङ्कल्पः, तत्र मतान्तरं च — 138–39

(वृ) प्रवृत्ते व्रीह्याग्रयण इति भाष्योक्त्याशयः, भाष्योक्तैकाष्टकाग्रहणानर्थक्योपपादनं च — 139

(भा) आग्रयणहविश्शेषभक्षणे यजमानर्त्विजां मन्त्रानुकीर्तनम् — 140

(वृ) प्रत्याम्नायपक्षे विशेषविवरणम् .... .... 140

(भा) आग्रयणानुकल्पभूतेऽन्वायातने दर्शपूर्णमासतन्त्रतायां पक्षभेदः — 142

(वृ) तत्र दर्शपूर्णमासतन्त्रतायां हेतुः .... .... 142

,, तत्र मीमांसकानामाशयः, अन्वायतनविकल्पपक्षविवरणं च — 143

,, अन्वायातनेऽनावाहनविषये हेतुकथनम्, आवाहनपक्षान्तराशयश्च — 143

विषयः पृष्ठसंख्या

(भा) आग्रयणविकल्पे श्यामाकाग्रयणस्य लोपः .... 143
(वृ) आग्रयणविकल्पे श्यामाकाग्रयणस्य लोपे उपपत्तिप्रकाशनम् 143
(भा) स्तम्बग्रासादिविकल्पपक्षे सर्वांशतुल्यविकल्पत्वानौचित्यम्, तत्र विषयव्यवस्था च 143
,, संवत्सरदर्शपूर्णमासानुष्ठाने एकस्मिन् पर्वणि नवाग्रयणम्, वैमृधोऽपि नवैरित्युपदेशपक्षः, संवत्सरमग्निहोत्रमात्रानुष्ठाने व्रीहियवग्रासिधेनुपयसा सायंप्रातरग्निहोत्रहोमः, दर्शपूर्णमासविरमणे स्थालीपाकहोमः, चतुश्शरावपाकेन ब्राह्मणचतुष्टयभोजनमित्यनुकल्पाश्च 144
(वृ) वैमृधोऽपि नवैरिति भाष्योक्तोपदेशपक्षाशयः .... 144
,, ब्राह्मणभोजनपक्षे चतुश्शरावपाको लौकिकाग्नौ .... 145
,, संवत्सरसत्रादिष्वाग्रयणे व्रतविषयविवरणम्, पञ्चसांवत्सरिकचातुर्मास्येषु नवैर्यागोऽन्वायतनं वा 145
,, प्रकृतिभूतदर्शपूर्णमासार्थकृतान्वारम्भणीयाया आग्रयणार्थताऽपि 145
,, आग्रयणेष्ट्यर्थमपि पुनरप्यन्वारम्भणीयेति पक्षश्च 146
,, यवाग्रयणे व्रीह्याग्रयणक्रममतिदिश्य तत्र श्यामाकौ न भवत इति निषेधस्य स्वारस्यम् 146
(भा) यवाग्रयणे दक्षिणा, तत्र हविश्शेषभक्षणे मन्त्रश्च.... 147

---

एकत्रिंशी खण्डिका

(भा) नानातन्त्रश्यामाकेष्टौ संप्रैषः .... .... 147
,, तत्र सामिधेनीसाप्तदश्याविधानान्नाज्यान्य इत्युपदेशपक्षः 148
(वृ) अज्यानीनिवृत्तिरित्युपदेशपक्षाशयः, भाष्यकृन्मते साप्तदश्यपुनर्विधानफलं च 148
(भा) सूत्रोक्तसद्वद्विराड्छन्दाविवक्षितानिर्देशः .... 148
(वृ) संयाज्ययोः विराट्शब्दाभावेऽपि त्रिपात्त्वेन विराट्साद्दश्याद्विराड्व्यपदेशानिर्वाहः 148

| विषयः | पृष्ठसंख्या |
|---|---|
| (भा) श्यामाकेष्टौ वाससो दक्षिणात्वम्, पुनर्वासोदक्षिणाविधानफलं च | 149 |
| ,, सौत्रमधुग्लुन्धबभ्रुकपिलशब्दानामर्थः .... | 150 |
| (वृ) दधिमन्थमधुपर्कशब्दयोस्सूत्रस्थयोरर्थः .... | 150 |
| (भा) नवानां हरितयवशाकशमीधान्यानां फलानां चानाग्रयणेऽपि तदशनस्यैच्छिकता | 150 |
| (वृ) अनुपदोक्तानां किञ्चिद्दानपूर्वकं भक्षणे भारद्वाजानुमतिः | 150 |
| ,, प्रियंग्वादीनामिज्यानर्हाणां भक्षणप्रतिषेधः .... | 150 |
| (भा) वेणुयवाग्रयणस्य कृताकृतत्वम्, तदनुष्ठितौ श्यामाकेष्टितन्त्रता, तद्देवताश्च | 151 |
| ,, हविर्विशेषेषु धाय्यायाज्यापुरोनुवाक्याः .... | 152 |
| (भा) व्रीहियवनियमो दर्शपूर्णमासयोरेव नाग्निहोत्र इति पक्षः | 152 |
| ,, व्रीहियवनियमः पूर्णमासविकारेष्वपीत्युपदेशपक्षः | 152 |
| (वृ) तण्डुलहोमस्य नित्यत्वसिद्धिः, विकृतिषु व्रीहियवनियमाभावश्च | 152 |
| (भा) नवश्यामाकव्रीहियववेणुयवैरिष्टौ कालविशेषाः .... | 152 |
| ,, आग्रयणस्य मीमांसकमते काम्यत्वम्, तन्मते सङ्कल्पप्रकारः मतान्तरे नित्यता च | 152 |
| (वृ) फलाश्रवणान्नित्यत्वमेवेत्यकामनापक्षं तत्प्रमाणयोः कथनम् | 152-154 |

इति अष्टमः पटलः

समाप्तष्षष्ठः प्रश्नः

---

सप्तमः प्रश्नः १५५-३७८ पृष्ठानि

प्रथमः पटलः

प्रथमा खण्डिका

| | |
|---|---|
| (भा) पशुबन्धनामनिर्वचनं, सर्वलोकप्राप्तेरेतत्फलत्वेऽपि कर्मान्तरसार्थक्यम्, एतत्संकल्पप्रकारश्च | 155 |

| विषयः | पृष्ठसंख्या |
|---|---|
| (वृ) भाष्योक्तकर्मान्तरानुष्ठानसाफल्योपपादनम् .... | 155 |
| (भा) पशुबन्धस्यामावास्यापौर्णमास्युभयकालविधानफलम्, संकल्पानन्तरमपामुपस्पर्शनादि च | 156 |
| ,, षड्ढोतुर्मानसहोमः, आहवनीयग्रहणात् षड्ढोतृविषये तस्य पार्थक्यम्, न प्रधानार्थत्वं, ग्रहे उपांशुत्वपक्षश्च | 156 |
| (वृ) भाष्योक्तसौत्राहवनीयग्रहणफलस्य विवरणम्, भाष्योक्ते ग्रहोपांशुत्वे हेतुकथनं च | 157 |
| ,, अत्र भाष्योक्तातिदेशस्थलप्रदर्शनम् .... | 158 |
| (भा) आहवनीयस्यैवात्र प्रणयनं, पृथग्दक्षिणाभावश्च .... | 158 |
| (वृ) पृथग्दक्षिणाभावे हेतुकथनम् .... | 158 |
| (भा) सूत्रे आहवनीयधारणविधानं पुरस्ताद्दर्विहोमानां पृथगग्नित्वे ज्ञापकम् | 158 |
| (वृ) भाष्योक्तस्य आहवनीयधारणविधानफलस्य सहेतुकं विवरणम् | 159 |
| (भा) पशोरसद्यस्कालत्वे यूपाहुतिविषये च विशेषाभिधानम्, यूपाहुतिसमाख्याफलं च | 159 |
| (वृ) सद्यस्कालत्वपक्षे प्रयोगमध्ये यजमानभोजनं निषिद्धम् | 159 |
| ,, सूत्रे स्रुवाहवनीयपुनरुक्त्या यूपसकाशे होमपक्षे जुह्वैव चतुर्गृहीतेनाज्येन होमः | 160 |
| ,, भाष्योक्तयूपाहुतिसमाख्याफलस्य सहेतुकं विवरणम् | 160 |
| (भा) क्वचिद्यूपाहुतिनिषेधः, यूपाहुतिमन्त्रमुक्त्वा यूपाभिगमनं, लौकिकारण्योर्मन्थनं, स्रुवेण जुह्वा वा आव्रश्चनहोम इति पक्षद्वयप्रदर्शनं च | 160 |
| (वृ) स्रुवेणाव्रश्चनहोमपक्षे हेतुकथनम्, जुह्वा होम इत्युपदेशपक्षाशयश्च | 160 |
| (भा) स्रुवाज्यशेषग्राहिणोऽध्वर्योर्वाशिग्राहिणस्तक्ष्णो ब्रह्मयजमानयोश्च छेदनार्हयूपदेशं प्रतिगमनम् | 161 |
| ,, यूपार्हाः कामभेदेन पलाशखदिरबिल्ववटाकृतिरोहीतका वृक्षाः | 161 |

| विषयः | | पृष्ठसंख्या |
|---|---|---|
| (वृ) | नित्येष्वपि कामनाचोदनोपपत्तिः .... | 162 |
| (भा) | यूपार्हदारुस्तम्भस्वरूपविवरणम् .... | 162 |
| ,, | आरुह्य च्छिन्नस्य वृक्षान्तरजातस्य च यूपानर्हता | 163 |
| (वृ) | यूपानर्हताप्रदर्शकभाष्याशयकथनम्, प्रत्यगुपनत-यूपस्य वैकल्पिकता च | 163 |

---

## द्वितीया खण्डिका

| | | |
|---|---|---|
| (भा) | यूपबहुत्वेऽप्यभिमन्त्रणाद्यग्रच्छेदनान्तस्यैकैकाभिप्रायकतया सूत्रे एनमित्युक्तिः | 164 |
| (वृ) | अभिमन्त्रणानन्तरमेव यूपोपस्पर्शनम् .... | 164 |
| ,, | यूपस्याञ्जनं स्रुवेणैव न हस्तेन .... .... | 164 |
| (भा) | सूत्रस्थस्वधितिपदस्य छेदनसाधनवाश्यर्थकत्वे .... लिङ्गकथनम् | 165 |
| ,, | यूपप्रमाणम्, सौत्रानक्षसङ्गपदार्थश्च .... | 165 |
| (वृ) | भाष्योक्तानक्षसङ्गपदार्थविवरणम् .... | 165 |
| (भा) | आव्रश्चनपदस्य वृक्षमूलार्थकता, तत्र होमाभिधानं च | 166 |
| ,, | सौत्राग्रपदस्य शाखार्थकता, अग्रच्छेदे विशेषकथनं च | 166 |
| ,, | पञ्चारत्नयादिप्रमाणेषु कामनाभेदाः .... | 166 |
| (वृ) | कामनाप्रदर्शकश्रुतिविवरणम्, ब्राह्मणश्रुतत्रिवृत्-स्तोमसंमितत्वोपपत्तिश्च | 166-67 |
| (भा) | यूपबहुत्वे व्यवस्था .... .... | 167 |
| (वृ) | भाष्यप्रदर्शितव्यवस्थाविवरणम् .... .... | 167 |
| (भा) | यूपप्रमाणे मतिभेदाः .... .... | 168 |
| (वृ) | रथस्थितोर्ध्वबाहुमानस्यार्थसिद्धता .... | 168 |
| ,, | अग्निमाने पुरुषप्रमाणोपदेशोऽपि तस्यान्यार्थताऽपि | 168 |
| ,, | अवमामात्रेत्यस्य विषयः, प्रमाणक्रमवृद्धिपक्षः, सर्वदा पुरुषप्रमाणपक्षः, तत्र वर्षीयस्त्वोक्तेर्निर्वाहश्च | 168 |

| विषयः | पृष्ठसंख्या |
|---|---|
| (भा) निरूढपशुबन्धज्योतिष्टोमयोर्यूपे जातिप्रमाणभेदे वाजसनेयपक्षः | 169 |
| (वृ) वाजसनेयमतोपन्यासस्य विकल्पार्थकता, स्वमतं च | 169 |
| „ भाष्यप्रदर्शिताध्वरशब्दार्थविवरणम् .... | 169 |


## तृतीया खण्डिका


| विषयः | पृष्ठसंख्या |
|---|---|
| (भा) उपरपदार्थः, तत्करणक्रमश्च .... | 170 |
| „ यूपाकृतिविशेषाः .... .... .... | 170 |
| „ सौत्रानुपूर्व्याग्निष्ठादिपदविवरणम् .... | 170 |
| „ तक्षणप्रथमभवशकलस्य स्वरुनामता .... | 171 |
| (वृ) प्रथमशकलस्य स्वरुनामतायां मानं, द्वितीय तृतीयशकलयोरुपयोगश्च | 171 |
| (भा) हस्ततलप्रमाणता मध्यतनुता यूपवृक्षजता च | 171 |
| „ चषालस्य अन्यवृक्षस्थस्याप्यधिमन्थनता .... | 171 |
| „ तृतीयशकलस्यैवाञ्जनार्थतेति नियमाभावः .... | 172 |
| (वृ) स्वरुचषालयोरन्यवृक्षजताप्रतिषेधे प्रमाणम् .... | 172 |
| „ अधिमन्थाञ्जनशकलयोर्यूपवृक्षसंबन्धानियमे उपपत्तिः | 172 |
| „ स्वर्वैकत्वबहुत्वोक्त्योरविरोधोपपादनम् .... | 172 |
| (भा) निरूढपशुबन्धवेदिप्रमाणतन्निर्माणकालप्रकारादिकम् | 173 |
| (वृ) भाष्योक्तवेदिप्रमाणे प्रमाणप्रदर्शनम् .... | 174 |
| „ सूत्रस्थस्य तामितिपदस्य दर्शपूर्णमासवदित्यस्य च तात्पर्यम् | 174 |
| „ सौमिकवेदिवृद्धौ भाष्योक्तः पक्षः पक्षान्तरं च .... | 174 |
| „ 'वेद्यामुत्तरवेदिं दशपदां' इति सूत्रखण्डाशयप्रकाशनम् | 175 |
| (भा) निरूढपशुबन्धोत्तरवेदिप्रमाणम् .... .... | 175 |
| „ शम्यासमीपे मन्त्रैरुपलेखनम् .... .... | 176 |


इति प्रथमः पटलः

विषयः पृष्ठसंख्या

अथ द्वितीयः पटलः

चतुर्थी खण्डिका


(भा) चात्वालमानं, अभ्र्या प्रदक्षिणं परिलेखनप्रकारादि च .... 177

" सूत्रे 'उत्तरवेद्यर्थान्' इत्युक्त्या सौमिके वैश्वदेवे चात्वालाभावसिद्धिः 177

(वृ) चात्वालमानलाभप्रकारः .... .... 177

(भा) पांसुहरणप्रथनशम्यासंनहनाभिमन्त्रणावोक्षणवालुकोपकिरणनिस्सारणवेद्यन्तरचनाः 178

(वृ) उत्तरवेद्यूर्ध्वमानम्, अवोक्षणस्यापि प्रोक्षणत्वोपपत्तिश्च. 178


---

पञ्चमी खण्डिका


(भा) उत्तरवेद्यां नाभिकल्पनं, तत्प्रकारः, तत्प्रोक्षणक्रमे हेत्वभिधानं च 179

" उत्तरवेद्या दक्षिणतोऽग्निनयनं, तत्र द्रव्यध्यानाकारः, जुह्वा गृहीतेन व्याघारणं च 180

(वृ) आहवनीयहोमे परिभाषायां जुहूविधानादत्राप्राप्त्या जुह्वा विधानोपपत्तिः 180

(भा) व्याघारणस्थानभूतांसश्रोणिपदार्थः .... 181

" पूतद्र्वाव्यदेवदारूत्थपरिधिभिः परिधानम्, औदुम्बरीभिरिति पक्षान्तरं परिधिसंधिना दक्षिणत उत्तरतश्च होमः 181


---

षष्ठी खण्डिका


(भा) संभारात्मकसुगन्धितेजनपेत्वश्रृङ्गान्तरभवोर्णास्तुकापदार्थः 181-82

(वृ) गार्ह्योर्णास्तुकाभिधानम् .... .... 182

(भा) व्याघारणादावधिकारिकथनम् .... .... 182

(वृ) व्याघारणादावधिकारिविशेषलाभप्रकारः .... 182

| विषयः | पृष्ठसंख्या |
| --- | --- |
| (भा) उदुम्बरप्लक्षान्यतरशाखाभिः प्रच्छादनकालः, तत्रोपदेशपक्षश्च | 183 |
| ,, पर्वयोगभेदादनुष्ठानक्रमः, तत्रोपदेशपक्षः, एवमन्यत्रातिदेशश्च | 183 |
| (वृ) भाष्योक्तस्य प्रच्छादनकालस्य पर्वयोगभेदप्रयुक्तानुष्ठानभेदस्य अन्यत्रातिदेशस्य च सहेतुकं विवरणम् | 183 |
| (भा) प्रणयनीयेध्मविषये संख्यावृक्षनियमाभावः, वृक्षनियम इत्युपदेशपक्षश्च | 184 |
| (वृ) अप्राकृतकार्यत्वादिध्मसंख्यानियमविरहोपपादनम्, वृक्षनियमपक्षाशयश्च | 184 |
| ,, इध्ममन्त्रस्यातिदेशाभावः .... .... | 185 |
| (भा) उद्यतहोमार्थं ज्वलदिध्मोद्यमनप्रकारः, तत्र पक्षान्तरं, तद्धोमाधिकरणाग्निश्च | 185 |
| (वृ) उद्यतहोमाग्नौ प्रमाणम्, सूत्रस्थाहवनीयग्रहणफलं च | 185 |
| (भा) सूत्रे उपयम्य हरतीत्यत्रावधारणांशपूरणम् .... | 186 |
| (वृ) उपयमनप्रभृतिसिकतानपनयनसिद्धौ हेतुकथनम् | 186 |

---

## सप्तमी खण्डिका

| | |
| --- | --- |
| (भा) पूर्णाहुतिविधिः, तत्र मन्त्रपाठादेव सिद्धेः सूत्रे सप्तवतीग्रहणस्य फलं च | 187 |
| ,, अतिमुक्तिहोमेषु मन्त्रनिर्देशः .... .... | 187 |
| ,, पशुबन्धस्यैवाहवनीयः, न प्रायश्चित्तेष्टेः, तत्रोपदेशन्यायपक्षौ | 188 |
| (वृ) भाष्योक्तौ प्रमाणप्रदर्शनम्, प्रायश्चित्तेष्टीनामन्ते पृथक्प्रणयनेन कर्तव्यता | 188 |
| ,, भाष्येऽत्र उपदेशपक्षस्य प्रथमोक्तेराशयः, न्यायपक्षाशयश्च | 188 |

| विषयः | पृष्ठसंख्या |
| --- | --- |
| (वृ) औत्तरवेदिकस्याग्नेरसमारोहणे हेतुकथनम् .... | 188 |
| (भा) औत्तरवेदिके प्रणीते प्राप्तकालाग्निहोत्रस्य तदधिकरणकता, तत्र मतान्तरं, हविश्श्रपणाग्निश्च | 189 |
| (वृ) भाष्योक्तार्थे हेतुकथनम् , भाष्यप्रदर्शितमतान्तराशयः भाष्योक्तकेचित्पक्षाशयश्च | 189 |
| ,, प्राप्तकालाग्निहोत्रविधानानावश्यकत्वशङ्कातत्परिहारौ | 190 |
| (भा) शाखाहरणादिकर्तव्यक्रमः, इध्मप्रस्तरविधृतिपरिधीनां स्वरूपादिकं च | 190 |
| (वृ) शाखाहरणविषये पक्षभेदाशयः, पवित्रस्वरूपं च | 191 |
| ,, पशोः पुरोडाशविकारत्वे हेतुः,आश्ववालस्य समूहनसाधनता च | 191 |

इति द्वितीयः पटलः

---

अथ तृतीयः पटलः

अष्टमी खण्डिका

| | |
| --- | --- |
| (भा) पात्रप्रयोगविधेरन्येषामप्यनुज्ञापरत्वपक्षः पक्षान्तरं च | 192 |
| (वृ) यथार्थमित्युक्तेः दृष्टप्रयोजनतात्पर्यकतयाऽदृष्टार्थान्यासादनपरत्वाभावः | 192 |
| ,, पात्रप्रयोगस्य संस्कारार्थत्वाभ्युपगमेन फलेऽसति तत्तन्निवृत्तिः | 192 |
| ,, पात्रदशकसंख्यापूरकपक्षप्रदर्शनम् .... | 193 |
| (भा) पात्रसादने द्वंद्वता, साद्यमानद्वंद्वानिर्देशः, शाखादीनां कुम्भ्यादिधर्मता च | 194 |
| ,, हृदयशूलादीनां सादनाविधेः पाठक्रमानुरोधित्वतदभावपक्षौ | 194 |
| (वृ) सादने पात्रादीनां द्वन्द्वताविवेचनं, तत्र हेतुकथनं च | 195 |
| (भा) यज्ञयोगकालः, तत्रोपदेशमतं च .... .... | 196 |

